| | | |
|---|---|---|
| | 1 2 1 2 | |
| A conch, shell 2. | कम्बुः शङ्खः क्षुल्लकाः क्षुद्रशङ्खाः , | A small shell 2. |
| | 1 2 | |
| | शम्बूकास्ते स्युः कपर्दो वराटः ॥६६४॥ | A small shell used as a coin ( कौड़ी ). |
| | 1 2 3 4 | |
| | सिन्धुः स्रवन्ती तटिनी तरङ्गिणी , | |
| | 5 6 7 8 | |
| A river 24. | नदी धुनी निर्झरिणी च निम्नगा । | |
| | 9 10 11 | |
| | कूलङ्कषा शैवलिनी सरस्वती , | |
| | 12 13 14 | |
| | समुद्रकान्ता ह्रदिनी तथापगा ॥६६५॥ | |
| | 15 16 17 18 19 20 | |
| | स्रोतः स्रोतस्विनी कर्षूः कुल्या द्वीपवती सरित् । | |
| | 21 22 a 23 24 | |
| | रोधो वप्रस्तु विज्ञेयो भिद्य उद्धयो नदः स्मृतः ॥६६६॥ | |
| | 1 2 3 4 5 6 | |
| A bank, a shore 6. | तीरं कूलं तटं कच्छः प्रपातो रोध उच्यते । | |
| | b 1 2 1 2 | |
| Near bank 2. | अर्वाक्कूलमपारं स्यात्परं पारमिति स्मृतम् ॥६६७॥ | Opposite shore 2. |
| | 1 2 | |
| | पात्रं तु कूलयोर्मध्यमावर्तः पयसां भ्रमः । | A whirl, an pool, eddy whirl 2. |
| | 1 c 2 1 d 2 | |
| The swelling or rising of a river or sea, flood 2. | पूरः स्यादम्भसो वृद्धिः फेनो डिण्डीर उच्यते ॥६६८॥ | Froth, foam 2. |
| | 1 2 e 3 4 5 6 | |
| A stream 6. | ओघः प्रवाहो वेणी च धारा स्रोतो रयः स्मृतः । | |
| | 1 2 f 3 | |
| Confluence or junction of two rivers 3. | सम्भेदः सङ्गमो नद्योः संवेद्यश्च निगद्यते ॥६६९॥ | |
| | 1 2 3 1 2 | |
| A mound in the middle of a river 2 | सैकतं पुलिनं द्वीपं सिकता वालुका स्मृता । | Sand, gravel 2. |
| | 1 2 | |
| An island, a cape. | मध्ये द्वीपमन्तरीपं ह्रदस्तोयाशयो मतः ॥६७०॥ | A lake 2. |
| | 1 2 1 g 2 | |
| The bend of a river 2. | चक्राणि पुटभेदाः स्युः सेतुर्वरण उच्यते । | A bridge 2. |
| | 1 2 h 1 2 3 | |
| Fare 2. | आतरस्तरपण्यं च तल्पं स्यादुडुपः प्लवः ॥६७१॥ | A raft, float 3. |
| | 1 2 3 4 1 2 | |
| A boat, a ship 4. | तरीर्नौर्मङ्गिनी बेडा नौदण्डः क्षेपणी स्मृता । | An oar 2. |
| | 1 2 1 i 2 | |
| A rudder 2 | अरित्रं कोटिपात्रं स्यात्पुलिन्दो मङ्ग उच्यते ॥६७२॥ | The head of a boat 2. |

a उध्यो, उयो, उद्यो, उद्धयो b अवाक्कूल c स्यादम्भसां d डिंडिम e वेणी तु f संवेद्यस्तु, संवद्यरक्त निगद्यते g सेतुर्वारणमुच्यते h तल्वं स्यांदुडुपं i पल्वणं।

The ganges 9. — भागीरथी[1] सुरसरि[2]द्विष्णुपदी[3] जाह्नवी[4] तथा गङ्गा[5] ।
मन्दाकिनी[6] त्रिपथगा[7] सरिद्वरा[8] त्रिदशदीर्घिका[9] प्रोक्ता ॥६७३॥

The river Godawari 2. The river Yamuna 3. — गोदावरी[1] च गोदा[2] कालिन्दी[1] दिनकरात्मजा[2] यमुना[3] ।

The river Sone 2. The river Narbada 3. — शोणो[1] हिरण्यबाहुर्[2]मेकलकन्या[1] च नर्मदा[2] रेवा[3] ॥६७४॥

A small pond 3. A large pond 3. — वेशन्तः[1] पल्वलं[a][2] तल्लं[3] कासारः[1] सरसी[2] सरः[3] ।

A natural pond 2. An artificial pond 2. — आखातो[b][1] देवखातः[2] स्यात्खाता[1] पुष्करिणी[2] भवेत् ॥६७५॥

A pond 2. A bridge 2. — आधारश्च[1] तडागं[2] स्यादाली[1] पाली[2] च कथ्यते ।

A moat, a ditch 2. — परिखा[1] दीर्घिका[2] प्रोक्ता खाता या परितः पुरम् ॥६७६॥

A drain 2. A spring 2. — परीवाहो[1] जलोच्छ्वास[2] उत्सः[1] प्रस्रवणं[c][2] स्मृतम् ।

Drop. — विप्रुषो[1] विन्दवः[2] प्रोक्ताः पृषतः[3] पृषतास्तथा[4] ॥६७७॥

Liquidated food; also mud 2. Mud, mire 6. — पिच्छिलं[1] स्याद्विजपिलं[d][2] पङ्कः[1] शादो[2] निषद्वरः[3] ।
जम्बालः[4] कर्दमः[5] प्रोक्तो बुधैरिचिकिलस्तथा[e][6] ॥६७८॥

A lotus 17. — सहस्रपत्त्रं[1] शत्रपत्त्र[2]मम्बुजं[3]
कुशेशयं[4] तामरसं[5] सरोरुहम्[6] ।
विसप्रसूनं[f][7] कमलं[8] महोत्पलं[9],
सरोज[10]मब्जं[11] नलिनं[12] च पुष्करम्[13] ॥६७९॥
राजीव[14]मरविन्दं[15] च पद्मं[16] पङ्कजमिष्यते[17] ।

Red lotus. A white lotus 2. — रक्तं कोकनदं[1] प्रोक्तं पुण्डरीकं[1] सिताम्बुजम्[2] ॥६८०॥

The white water lily 2. A blue lotus 4. — सौगन्धिकं[1] च कह्लारं[2] स्यादिन्दीवर[1]मुत्पलम्[2] ।

White lotus 2. — नीलोत्पलं[3] कुवलयं[4] कैरवं[1] कुमुदं[2] विदुः ॥६८१॥

a पल्वणं b अखातो c प्रवहणं d स्याद्विजवलं e बुधै-
रिचकिल f विसप्रसूतं ।

A pericarp of lotus 2.

Fibrous root of a lotus; a lotus fibre 3.

(a) lotus plant bearing white lotuses
(b) place or pond abounding in white lotuses
(c) an assemblage of white lotuses.

1 a 2 b 1 2
कर्णिका बीजकोशः स्यात्किञ्जल्कं केसरं स्मृतम् ।
1 c 2 3 1 2
मृणालं स्याद्बिसं कन्दो विसिनी नलिनी भवेत् ॥६८२॥
1 2 3
कुमुद्वती कुमुदिनी बुधैः कैरविणी स्मृता ।

The filament of a flower 2
A lotus plant, an assemblage of lotuses, lotus fibre; also a lake abounding in lotuses 2.

A water plant moss.

A well 2
प्रधिर्नेमि A pulley, the periphery or circumference of a wheel 2.

A small pool or pond near a well or a well itself 2.

The rope and bucket of a well 2.

A canal 2.

d 1 2 1 2
शेवालं शैवलं प्रोक्तं जलशूकं च नीलिका ॥६८३॥
1 2 1 2 1 2 e 3
अन्धुः कूपः प्रधिर्नेमिश्चुरी चुण्ढी च चूतकः ।
1 2 1 2
निपानमुदपानं च वाप्याहावश्च कथ्यते ॥६८४॥
f 1 2 1 2
उद्घाटकं घटीयन्त्रं पादावर्तोऽरघट्टकः ।
1 g 2 1 2
पानं तु सारणिः प्रोक्ता प्रणाली जलपद्धतिः ॥६८५॥

Moss 2.

A small well or reservoir 3.

A trough near a well for watering cattle 2.

A wheel or machine for raising water from a well 2.

A channel, a drain, a gutter 2.

इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां

पातालकाण्डं तृतीयं समाप्तम् ॥३॥

a वीजकोशं b किञ्जल्कः किंजः c स्याद्बिसकन्दो d शैवालं
e चंठी, चुंडी f उद्घाटनं g सारणैः, सारणं ।

# चतुर्थं सामान्यकाण्डम्

* 1 2 3 4 5 6 7 8
निकरनिकायनिवहविसरव्रजपुञ्जसमूहसञ्चयाः ,
9 10 11 a 12 13 14 15
समुदयसार्थयूथनिकुरम्बकदम्बकपूगराशयः ।
16 17 18 19 20 21 22
चयसमवायवृन्दसन्दोहसमाजवितानसंहति-
23 24 25 26 27 28 29 30
प्रकरगणौघसंघसंघातव्रातकुलोत्कराः स्मृताः ॥६८६॥

Heap, collection 40.

31 b 32 33 34 35
पटलं पेटकं चक्रं चक्रवालं च मण्डलम् ।
36 37 38 39 40
जालं जातं तथा व्यूहवारस्तोमाश्च ते स्मृताः ॥६८७॥

Small, little, minute 15.

1 2 3 4 5 6 7 8
सूक्ष्मलेशलवश्लक्ष्णक्षुद्रदभ्रकणाणवः ।
9 10 11 12 13 14 15
किञ्चिन्मात्रतनुस्तोक ह्रस्वाल्पत्रुटयः समाः ॥६८८॥

Fine, pleasing 42.

c 1 2 3 4 5 6 7
प्राग्र्यं प्राग्रहरं प्रवेकमपरं वर्यं वरेण्यं वरं ,
8 9 10 11 12 13 14
श्रेष्ठं प्रेष्ठमनुत्तमं च मधुरं मञ्जु प्रियं मञ्जुलम् ।
15 16 17 18 19 20 21
हृद्यं हारि मनोहरं च रुचिरं कान्तं परं सुन्दरं ,
22 23 24 25 26 27 28 29
सौम्यं साधु च वल्गु चारु सुषमं वामं शुभं पेशलम् ॥६८९॥

* This छन्द is called ध्रितश्री or पञ्चकवली consisting 4 tetrastichs each containing 28 short syllables arranged in the following order⏑⏑⏑ ⏑–⏑–⏑⏑⏑–⏑⏑⏑–⏑⏑⏑–⏑⏑–
it also occured in sloka 640. It is also used by the poet माघ in शिशुपालवध ३–८२ ।

a निकरंव b पेटलं c प्राग्रं ।

Chief, Principal.

[30]अग्रयं [31]प्रधानं [32]प्रमुखं [33]पुरोगं ,
[34]मुख्यं [35]परार्ध्यं [36]प्रवरं [37]प्रवर्हम् ।
[38]अग्रेसरं [a][39]सत्तम[40]मुत्तमं च ,
[41]ग्रामण्य[42]मग्रण्यमुदाहरन्ति ॥६९०॥

Doubt, hesitation9.

[1]शङ्का [2]वितर्कः [3]सन्देहः [4]संशया[b]रेक[5]विभ्रमा[6]: ।
[7]विचिकित्सा [8]विकल्पश्च [9]भ्रान्तिरेकार्थवाचकाः ॥६९१॥

Near 19.

[1]समीपं [2]सनीडं [3]समर्याद[4]मारात् ,
[5]सदेशं [6]सवेशं [7]ससीमो[8]पकण्ठम् ।
[9]तथाभ्यर्ण[10]मभ्यग्र[c][11]मभ्याशमाहु—
बुधाः [12]सन्निधाना[13]न्तिके [14]सन्निकृष्टम् ॥६९२॥
[15]आसन्नं [16]सविधं [17]पार्श्व[18]मुपान्त[19]मपदान्तरम् ।

Remote, distant 5.

[1]विप्रकृष्टं [2]परं [3]दूर[4]माराद् [5]व्यवहितं स्मृतम् ॥६९३॥

Like, similar 11.

[1]सदृक् [2]समानः [3]सदृशः [4]सदृक्षः ,
[5]प्रख्यः [6]प्रकाशः [7]प्रतिमः [8]प्रकारः ।
[9]तुल्यः [10]समः [11]सन्निभ इत्यभिन्नाः ,
शब्दाः प्रयोगेषु गवेषणीयाः ॥६९४॥

Fickle 10.

[1]लोलं [2]चपलं [3]चटुलं [4]प्रचलं [5]तरलं [6]परिप्लव[7]मधीरम् ।
[8]पारिप्लवं च धीराश्चलाचलं [9]चञ्चलं [10]च कथयन्ति ॥६९५॥

Crooked 12.

[1]वक्रं [2]वृजिनं [3]भङ्गुर[4]माविद्धं [5]वेल्लितं [6]नतं [7]जिह्मम् ।
[8]भुग्न[9]मरालं [10]कुटिलं [11]व्याकुञ्चित[12]मूर्मिमत्कथितम् ॥६९६॥

a सत्तमनुत्तमं, सतममुत्तमं, सत्तमुत्तमं b संशयांवेक, संशयाबेक, संशयोद्रेक c म्यासमा ।

1 2 3 4 5 6 7 8 9 10
द्राक् चपलं लघु मङ्क्षु स्राक् तूर्णं त्वरितमाशु शीघ्रमरम् ।
11 12 13 14 15 16
Soon, quickly 16. अह्नाय सत्वरं च क्षिप्रं द्रुतमञ्जसा झटिति ॥६९७॥

1 2 3 4 5 6 7
Always, continual, unceasing 11. सततं सन्ततमनिशं नित्यमजस्रं च शश्वदश्रान्तम् ।
8 9 10 11
अविरतमनवरतं स्यादेकार्थमनारतमसक्तम् ॥६९८॥

1 2 3 4 5 6 7 8 9
Large, great 13. बृहदुरु गुरु विस्तीर्णं पुरु पृथु पृथुलं महद्विशालं च ॥।
10 11 a 12 13
व्यूढं विपुलं रुद्रं वरिष्ठमेकार्थमुद्दिष्टम् ॥६९९॥

1 2 3 4 5 6 7
A pair, a couple 7. युग्मं युगं च युगलं द्वन्द्वं द्वितयं यमं यमलम् ।
b 1
Couple of male and female. स्त्रीपुंसयोस्तु युग्मं मिथुनं परिकथ्यते सद्भिः ॥७००॥

c 1 2 3 4 5 6
Abundant; much 10. प्राज्यं भूरि प्रभूतं च प्रचुरं बहुलं बहु ।
d 7 8 9 10
पुरुजं पुष्कलं पुष्टमदभ्रमभिधीयते ॥७०१॥

1 2 3 4 5 6
Full of, gathered, accumulated 9. आचितं निचितं व्याप्तं छन्नं कीर्णं च सङ्कुलम् ।
7 8 9
आकुलं भरितं पूर्णं नातिनानार्थवाचकाः ॥७०२॥

1 2 3 4
Rejected, set aside 7. प्रत्याख्यातं प्रतिक्षिप्तं प्रत्यादिष्टं निराकृतम् ।
5 6 7
निरस्तमपविद्धं च प्राज्ञाः परिहृतं विदुः ॥७०३॥

1 2 3 4
Disrespect, dishonour, contempt 7. अत्याकारः परिभवो निकारश्च पराभवः ।
5 6 7
अनादरश्चाभिभवस्तिरस्कारश्च कथ्यते ॥७०४॥

1 2 3 4 5
Terrible, fearful 10. घोरं प्रतिभयं भीमं दारुणं स्याद्भयानकम् ।
6 7 8 9 10
आभीलं भीषणं भीष्मं भैरवं च भयावहम् ॥७०५॥

1 2 3 4 5
Friendship 10. सख्यं साप्तपदीनं सौहार्दं सौहृदं तथा स्नेहः ।
6 7 8 9 10
मैत्री प्रीतिरजर्यं सभाजनं सङ्गतं प्रोक्तम् ॥७०६॥

a वृन्दं, भद्रं, बड्रं b स्त्रीपुंसयोश्च c प्रायं d पुरुहं ।

| | | |
|---|---|---|
| First 7. | आदिरग्रं पुरा पूर्वं प्रथमं प्राक् पुरः स्मृतम् । | |
| Beginning 3. | उपज्ञोपक्रमारम्भौ पश्चाच्च चरमं भवेत् ॥७०७॥ | Final, last 2. |
| Solitude 7. | रहः प्रच्छन्नमेकान्तं निःशलाकमुपह्वरम् । | |
| | उपांशु विजनं प्रोक्तं रहस्यं गुह्यमुच्यते ॥७०८॥ | Secret, concealed 2. |
| Trick, deceit, deception 10. | कैतवं कपटं कूटं व्याजच्छद्मोपधिच्छलम् । | |
| | मिषं निभं च निर्दिष्टं व्यपदेशश्च सूरिभिः ॥७०९॥ | |
| Wish, desire 8. | इच्छा वाञ्छा स्पृहा काङ्क्षा कामनेप्सा[a] रुचिस्तथा । | |
| | आशंसा चेति तुल्यार्था निश्चितं नियतं स्मृतम् ॥७१०॥ | Positiyely 2. |
| Old, ancient 6. | जीर्णं जरत्पुराणं प्रत्नं प्रतनं पुरातनं प्रोक्तम् । | |
| New, fresh 6. | नव्यं नवं नवीनं स्यान्नूतनमभिनवं नूत्नम् ॥७११॥ | |
| Enclosed, encircled; surrounded 5. | निवृतं[b] वेष्टितमुक्तं परिवृत्तं वलयितं परिक्षिप्तम् । | |
| Eradicated 4. | आवर्हितमुन्मूलितमुत्पाटितमुद्धृतं च समम् ॥७१२॥ | |
| All, whole, entire 8. | कृत्स्नं समग्रं सकलं समस्तं , | |
| | सर्वं च विश्वं निखिलाखिले च । | |
| Fragment, a part 7. | खण्डार्धनेमाः शकलं च भित्तं , | |
| | सामीत्यसम्पूर्णसमानसंज्ञाः ॥७१३॥ | |
| Scattered 2. | अवकीर्णमवध्वस्तं त्यक्तमुत्सृष्टमुज्झितम् । | Left, thrown away 3. |
| Dispised 3. | अनादृतमवज्ञातमपहस्तितमिष्यते ॥७१४॥ | |
| Promise 6. | आगूः सङ्गरसन्धाप्रतिश्रवाः संश्रवः प्रतिज्ञा च । | |
| Disregard, contempt 5. | हेला स्यादवहेलं रीढावज्ञावलीढा[c] च ॥७१५॥ | |

a कामना स्याद्‌ *b* निवृतं वेष्टशुक्तं c लीढा, रीढा ।

Sorcery. [a][1]मूलीकर्म प्रोक्तं [2]संवननं [3]कामणं [4]वशीकरणम् ।

Respentance 4. [1]विप्रतिसारो[2]ऽनुशयः [3]पश्चातापो[4]ऽनुतापः स्यात् ॥७१६॥

Thin, spare 7. [b][1]क्षामं [2]शातं [3]कृशं [4]क्षीणं [5]पेलवं [6]तलिनं [7]तनु ।

Dense, thick 9. [1]निरन्तरं [2]घनं [3]सान्द्रं [4]बहुलं [5]विरलेतरम् ॥७१७॥

[c]निविडं [7]निविरीशं च [8]दृढं [9]गाढं प्रचक्षते ।

Abundant 5. [1]कामं [2]प्रकामं [3]पर्याप्तं [4]नितान्तं [5]भृशमुच्यते ॥७१८॥

Excessive 3. [1]अत्यर्थम[2]तिमर्यादम[3]तिवेलं च कथ्यते ।

Concealment 4. [1]व्यवधानं [2]तिरोधानम[d]न्त[3]र्धिर[4]पवारणम् ॥७१९॥

Mutual, reciprocal 4. [1]परस्परं [2]मिथः प्रोक्त[3]मन्योन्य[4]मितरेतरम् ।

Sport, play 4. [1]कौतूहलं [2]विनोदः स्यात्[3]कौतुकं च [4]कुतूहलम् ॥७२०॥

Line, row, range 6. [1]आली [2]श्रेण्या[3]वली [4]पङ्क्ति[5]र्वीथी [6]राजी च कथ्यते ।

Shaving, tonsure 4. [1]क्षौरं च [2]भद्राकरणं [3]मुण्डनं [4]वपनं स्मृतम् ॥७२१॥

[1]दर्पो [2]मदो[3]ऽवलेपो [4]मानो [5]गर्वो भवे[6]दहङ्कारः ।

Pride, haughtiness 11. [7]आवेशः [8]संवेगः [9]संरम्भः [10]सम्भ्रमस्तथा[11]टोपः ॥७२२॥

Power, strength, might 13. [1]प्राणः [2]स्थाम [3]बलं [4]द्युम्न[5]मोजः [6]शुष्म [7]तरः [8]सहः ।

[9]प्रतापः [10]पौरुषं [11]तेजो [12]विक्रमः स्यात्[13]पराक्रमः ॥७२३॥

Pity, kindnees, comparsion 6. [1]अनुक्रोशः [2]कृपा [3]शूकं [4]दया च [5]करुणा [6]घृणा ।

Repeatedly 5. [1]प्रतिक्षण[2]मभीक्ष्णं च [3]भूयः स्या[4]दसकृ[5]न्मुहुः ॥७२४॥

Terror, fear 6. [1]आतङ्को [2]भय[3]माशङ्का [4]दरस्[5]त्रासश्च [6]साध्वसम् ।

Forbearance patience 5. [1]मर्षः [2]क्षमा [3]तितिक्षा च [4]क्षान्तिरुक्ता [5]सहिष्णुता ॥७२५॥

a मूलकर्म b क्षामं क्षांत c निवडं निवडीशं d तर्धि-परिवारणम् ।

| Meaning | Verse | Meaning |
|---|---|---|
| A staff, a stick 5. | 1 2 3 4 5<br>वैणवो लगुडो रम्भो दण्डो यष्टिश्च कथ्यते । | |
| Walking about, going, moving 5. | 1 2 3 4 5<br>गतिर्वीखा विहारः स्यात्परिसर्पः परिक्रमः ॥७२६॥ | |
| Corner 5. | 1 2 3 4 5<br>अणिरश्रिस्तथा कोटिरश्रः कोणश्च कथ्यते । | |
| Foul, dirty 4. | 1 2 3 4<br>कश्मलं मलिनं म्लानं मलीमसमुदाहृतम् ॥७२७॥ | |
| Wages, cost price 6. | 1 2 3 a 4 5 6<br>भृतिर्भृत्या च कर्मण्या वेता मूल्यं च वेतनम् । | |
| A line of a letter or writing 3. | b 1 2 c 3<br>लिपिरालेख्यलेखा स्याल्लिपिर्लेखाक्षरस्य च ॥७२८॥ | |
| Cutting, clipping 4. | 1 2 3 4<br>कल्पनं कर्तनं प्रोक्तं वर्धनं छेदनं तथा । | |
| Reverse 4. | 1 2 3 4<br>व्यत्ययः स्याद्विपर्यासो वैपरीत्यं विपर्ययः ॥७२९॥ | |
| Concealment of knowledge 4. | 1 2 3 4<br>अपह्नवोऽपलापः स्यादपज्ञानमपात्ययः । | |
| Composition 5. | 1 2 3 4 5<br>श्रन्थनं ग्रन्थनं गुम्फः सन्दर्भो रचना स्मृता ॥७३०॥ | |
| Rubbing the body with fragrant unguents 2. | 1 d 2 1 2<br>उद्वर्तनमुत्सादनमाहुः सोत्प्रासहसितमुपहसितम् । | Ridiculing, derision 2. |
| Confused 2. | 1 2 1 2 3<br>उत्पिञ्जलमाकुलकं स्यादनुपदमन्वगन्वक्षम् ॥७३१॥ | Following 3. |
| White 7. | 1 2 3 4 5 6 7<br>गौरः श्वेतः सितः शुभ्रो वलक्षो धवलोऽर्जुनः । | |
| Yellowish, white pale 5. | 1 2 3 4 e 5<br>हरिणः पाण्डुरः पाण्डुरवदातश्च पाण्डरः ॥७३२॥ | |
| | 1 2 3 f 4 5 6<br>अरुणः शोणो रक्तो माञ्जिष्ठः पाटलस्तथा ताम्रः । | |
| Red 7. | 7 g<br>लोहित इत्येकार्थाः कविभिः शब्दाः प्रयुज्यन्ते ॥७३३॥ | |
| Black 9. | 1 h 2 3 4 5 6<br>असितं शिति कृष्णं च कालं नीलं च मेचकम् । | |
| | 7 8 9 1 2 3<br>श्यामं तु श्यामलं रामं पालाशं हरितं हरित् ॥७३४॥ | Green 3. |
| Tawny, brown 4. | 1 2 3 4<br>हरिः कद्रुः कडारश्च पिङ्गलः परिकीर्तितः । | |
| Yellow 2. | 1 2 1 2<br>पीतं हारिद्रमाख्यातं श्यावं तु कपिशं स्मृतम् ॥७३५॥ | Dark brown 2. |

a वेचा b लिविराले c लिपिर्लेखाक्षरस्य d मुछादनमाहुः e पाण्डुरः, पाण्डुकः f मांजिष्टः g शब्दाः कविभिः h सिति, सित ।

| | | |
|---|---|---|
| Brown tawny 5. | पिङ्गः पिशङ्ग इत्युक्तो बभ्रुः कपिलः पिङ्गलः । | |
| Variegated, speckled 2. | सारङ्गः शबलो वर्णः कल्माषः कृष्णपाण्डुरः ॥७३६॥ | Greyish white 2. |
| Reddish yellow 2. | पिञ्जरः[a] पीतरक्तः स्याद्धूसरः स्तोकपाण्डुरः । | Greyish white 2. |
| Dark red 2. | रक्तश्यामो[b] भवेद्धूम्रो धूमलः स च कथ्यते ॥७३७॥ | |
| Lilyleaf like lady 2. | श्येनी कुमुदपत्राभा शुकाभा हरिणी स्मृता । | Parrot like lady 2. |
| The lotus leaf like. lady; rose red lady 2. | जपाकुसुमसंकाशा लोहिनी परिकीर्तिता ॥७३८॥ | |
| Regular course 2. | परिपाटयानुपूर्वी स्यादुपशायो[c]ऽनुपात्ययः । | 1. Sleeping in turn, rotation for sleeping with other. |
| Progression, succession 2. | अनुक्रमश्च पर्यायो विशायः परिकीर्तितः ॥७३९॥ | 2. Absence of neglect following the appointed order. |
| Envy, hypocrisy 5. | ईर्ष्या स्यात्कुहना दम्भो मिथ्याचर्या च कुक्कुटिः[d] । | |
| Jugglery, delusion 5. | कुसृतिर्निकृतिर्[e]माया शाम्बरी पथकल्पना[f] ॥७४०॥ | |
| Variegated, mixed 6. | चित्रकिर्मीर[g]कल्माषशबलोन्मिश्रकर्बुराः । | |
| Combined, mixed 5. | करम्बः कवरः शारः सम्पृक्तः खचितः समाः ॥७४१॥ | |
| Longing, strong desire 7. | आयल्लकमुत्कण्ठा स्यादुत्कलिका रतिश्च रणरणकम् । | |
| | औत्सुक्यं हृल्लेखो विरहवियोगौ च तुल्यार्थौ ॥७४२॥ | Separation 2. |
| Contrary, opposed 4. | प्रतिकूलं प्रतिलोमं प्रतीपमुक्तं प्रसव्यमेकार्थम् । | |
| Covered, concealed 5. | अपवारितं च पिहितं संवीतं संवृतं स्थगितम् ॥७४३॥ | |
| A part, a limb, a portion 5. | आहुः प्रतीकमवयवमपघनमङ्गं तथैकदेशं च । | |
| Exceeding much 4. | उल्वणमुद्धतमुद्भटमुत्कटमिति नातिनानार्थाः ॥७४४॥ | |
| Assembly 6. | समाजः संसदास्थानी सभा स्यात्परिषत्सदः । | |
| Wonder, surprise 5. | चित्रमद्भुतमाश्चर्यं विस्मयश्चोद्यमुच्यते ॥७४५॥ | |

a पिञ्जिरः, पिंजिरः परिरत्तः b रक्तश्याम c स्यादुदाशयो, स्यादुप्तशपो d कुर्कुटिः, कुकुटिः e निष्कृतिं, निःकृति f-पृयुकल्पिनी g चित्रकर्मीर ।

| | | |
|---|---|---|
| Shaking, trembling 4. | 1 2 3 4<br>प्रेङ्खोलितं तरलितं प्रेङ्खितं लुलितं स्मृतम् । | |
| Proper, fit 5. | 1 2 3 4 5<br>युक्तं स्यादुचितं न्याय्यं प्राप्तमौपयिकं तथा ॥७४६॥ | |
| Placed in or upon 4. | 1 2 3 4<br>आहितं निहितं न्यस्तमारोपितमिति स्मृतम् । | |
| Put on, dressed 4. | 1 2 3 4<br>बद्धं पिनद्धमामुक्तमपिनद्धं च कथ्यते ॥७४७॥ | |
| Cheating 4. | 1 2 3<br>वञ्चनं चातिसन्धानं व्यलीकं स्यात्प्रतारणम् । | |
| Infraction of an engagement, deception 3. | 1 2 3 a<br>विप्रलम्भो विसंवादो विप्रलापश्च कीर्तितः ॥७४८॥ | |
| Offence, fault 5. | 1 2 3 4 5<br>व्यलीकमपराधः स्यादागो मन्तुश्च विप्रियम् । | |
| Courtesy 4. | 1 2 3 4<br>प्रणतिः स्यादनुनयः प्रणिपातश्च सान्त्वनम् ॥७४९॥ | |
| Introduction; resolution; beginning 2. | 1 2 1 2 3<br>उद्घात उक्तः प्रस्तावो वारश्चावसरः क्षणः । | Opportunity 3. |
| Approached, near 3. | 1 2 3<br>वदन्त्युपनतं प्राज्ञा उपसन्नमुपस्थितम् ॥७५०॥ | |
| High, tall 5. | 1 2 3 4 b 5 1 2<br>प्रांशूच्चमुन्नतं तुङ्गमुदग्रं दीर्घमायतम् । | Long 2. |
| Unfettered, unrestrained 4. | 1 2 3 4<br>अयन्त्रितं स्यादुद्दाममुच्छृङ्खलमनर्गलम् ॥७५१॥ | |
| Clear, manifest 5. | 1 2 3 4 5<br>विशदं प्रकटं स्पष्टं प्रकाशं स्फुटमिष्यते । | |
| Forth with 2. | 1 2 1 2 c<br>तत्क्षणैकपदे तुल्ये सद्यः सपदि च स्मृते ॥७५२॥ | On the spot 2. |
| Large, broad 4. | d 1 2 3 4<br>विशङ्कटं विशालं स्यात्करालं विकटं तथा । | |
| Globular, round 3. | 1 2 3 1 e 2<br>निस्तलं वर्तुलं वृत्तं स्थपुटं विषमोन्नतम् ॥७५३॥ | Unevenly raised 2. |
| A bucket 2. | f 1 2 1 2<br>अवगाहो जलद्रोणी निर्वेदः खेद उच्यते । | Grief 2. |
| Carelessness 2 | 1 2 g 1 2<br>प्रमादोऽनवधानं स्यादत्याधानमतिक्रमः ॥७५४॥ | Transgression 2. |
| Enjoyment 2. | 1 2 1 2<br>निर्वेश उपभोगः स्यादाभोगः परिपूर्णता । | Fulness, completeness 2. |
| Well known, censured. | 1 h 2<br>अवगीतं मुहुर्दृष्टमुपलब्धं च यद्भवेत् ॥७५५॥ | |

a कीर्त्यंते, कीत्यन्ते b तुगं उदंतं c स्मृतम् d विसंकटं e छपुटं, सपुटं f अवगादो g स्यावन्याधान, स्यावत्यादान h मुहुर्दिष्ट, मुहुर्दुष्ट ।

Left 2 — वामं[1] सव्यं[2] विदुः प्राज्ञा अपसव्यं[1] च दक्षिणम्[2] ॥ — Not left, right 2.

प्रतिकूलानुकूलार्थे[a] अपष्ठु[1] त्वनपष्ठु[2] च ॥७५६॥ — 1. Unfavourable. 2. Favourable.

Turned away, averted 4. — विपरीतं[1] पराचीनम[b 2]पाचीनं[3] पराङ्मुखम्[4] ।

Indolence, laziness 2. — स्मृतं कौसीद्य[1]मालस्य[2]मुपधा[1] तु परीक्षणम्[2] ॥७५७॥ — Trial of honesty 2.

A lath provided with slings at each end for carrying burden 4. — विवधो[1] वीवधो[2] भारः[3] पर्याहारश्च[4] कथ्यते ।

A looped string 2. — काचं[1] शिक्य[c 2]मिति प्रोक्तं भारयष्टि[1]र्विहङ्गिका[2] ॥७५८॥ — A pole for carrying burdens 2.

Excellence 2. — सौष्ठवं[1] स्यादवष्टम्भो[2] हठः[1] प्रसभ[d 2]मुच्यते । — Force, violence 2.

Captive, prisoner 2. — प्रग्रहो[1] ग्रहको[2] वन्दी[3] पणो[e 1]ऽक्षेषु ग्लहः[2] स्मृतः ॥७५९॥ — A stake at gambling 2.

Abstinence from all food 4. — प्रायः[1] स्याद्भोजनत्यागः[2] संन्यासो[3]ऽनशनं[4] स्मृतम् ।

In vain, useless, to no purpose 2. Fruitless 2. — मोघं[1] मुधा[2]ऽफलं[1] बन्ध्यं[2] नतं[1] नम्रं[2] च बन्धुरम्[3] ॥७६०॥ — Bent 3.

Trade traffic 3. — स्मृतं वणिज्यं[1] वाणिज्यं[2] वणिज्या[3] च समं त्रयम् ।

Fight, battle 3. — युद्धार्थे[1] द्वे प्रयुज्येते[f] दौर्मद्यं[2] च करीरकम्[3] ॥७६१॥

Intention, purpose 2. — आकूतं[1] स्यादभिप्रायो[2] व्याकूति[1]र्भङ्गि[2]रुच्यते । — Deception, crooked-ness 2.

A piece of ground purified by sacrifice 2. — स्थण्डिलं[1] संस्कृता[2] भूमिरयनं[1] स्थान[g 2]मुच्यते ॥७६२॥ — Site 2.

New, recent 2. — प्रत्यग्र[1]मुक्तं सद्यस्क[2]मुपाग्र[1]मुपसर्जनम्[2] । — Inferior 2.

A swing 3. — दोला[1] प्रेङ्खोलनं[2] प्रेङ्खा[3] उत्सवः[1] स्यान्महः[2] क्षणः[3] ॥७६३॥ — A festival 3.

A buffalo's horn 2. — गवलं[1] माहिषं[2] शृङ्गं दृति[1]श्चर्मप्रसेवकः[h 2] । — A pair of bellows 2.

A casket, a box 2. — समुद्गः[1] सम्पुटो[2] ज्ञेयो वडिशं[1] मत्स्यबन्धनम्[2] ॥७६४॥ — A fish-hook 2.

a प्रतिकुलोनुकूलार्थो अपष्ठुरमपष्णु च, प्रतिकूलानुकूलार्थे अपष्टुरमपच्छ च b पराचीनपाचीनं, पराचीनं परांग्मुखम् c शक्यमिति d प्रसभ उच्यते e पणाक्षेषु, पण्यक्षेषु, पण्याक्षेषु f प्रयुज्येतां दौर्मध्यं g स्थानमिष्यते h प्रसेधकः ।

| | | |
|---|---|---|
| Retaliated. | कृते प्रतिकृतं[1] प्राज्ञैः प्रतिनिर्यातनं[1] स्मृतम् । | Retaliation. |
| Worrying to death. | सपत्नाकरणं[1] प्रोक्तं यत्परस्यातिपीडनम् ॥७६५॥ | |
| Conciseness 4. | समासः[1] स्यात्समाहारः[2] संक्षेपः[3] सङ्ग्रहस्तथा[4] । | |
| Expanse 3. | व्यासः[1] प्रपञ्चो[2] विस्तारः[3] स च शब्दस्य विस्तरः[1] ॥७६६॥ | Copiousness. |
| Whet 2; thrown 2. | उन्नं[1] क्लिन्नं[2] स्मृतं नुन्नं[a1] क्षिप्तं[2] तुन्नं[1] च पीडितम्[2] । | Hurt, injured 2. |
| Fallen 2. | पन्नं[1] तु पतितं[2] प्रोक्तं सन्नं[b1] शान्तं[2] च सूरिभिः ॥७६७॥ | Becalmed 2. |
| Cast down 2. | न्यञ्चितं[1] स्यादधःक्षिप्तं[2] क्षिप्तमूर्ध्वमुदञ्चितम्[1,2] । | Thrown upwards 2. |
| Suspended. | काचितं[1] सज्जितं[c2] प्रोक्तं रूषितं[1] गुण्डितं[d2] स्मृतम् ॥७६८॥ | Crushed, pounded 2. |
| Obstacle, impediment 2. | विष्कम्भः[1] प्रतिबन्धो[2] विश्रम्भः[1] कथ्यते च विश्वासः[2] । | Trust, confidence 2. |
| Pounding of fragrant substances 2. | सम्मर्दः[1] स्यात्परिमल[2] उपमर्दो[1] विप्रकारः[2] स्यात् ॥७६९॥ | Hurt, injury 2. |
| Consideration of moral duties 2. | उपाधिर्धर्मचिन्ता[1,2] स्यान्निःशोध्यमनवस्करः[1,2] । | Clean, unsoiled 2. |
| Wicked 2. | कुप्रियं[1] च जघन्यं[2] स्यान्निःशेषं[1] न्यक्षमिष्यते[2] ॥७७०॥ | Whole 2. |
| Offence, injury 2. | अपकारो[1] भवेद् द्रोहो[2] दोष[1] आदीनवो[2] मतः । | Fault 2. |
| Astringent 2. | कषायं[1] तुवरं[2] प्रोक्तं सुरुङ्गा[e1] सन्धिरुच्यते[2] ॥७७१॥ | A tunnel 2. |
| | असौम्यं यद्भवेच्चक्षुरचक्षुस्तत्प्रचक्षते[1] । | A bad or miserable eye; eye-less or blind. |
| Dissimulation, concealing or hiding one's mental disposition 2. | अवहित्थं[1] च शब्दज्ञा आकारस्य निगूहनम्[2] ॥७७२॥ | |
| Familiarity 2. | संस्तवः[1] स्यात्परिचयः[2] प्रसादः[1] प्रणयः[2] स्मृतः । | Affection, favour 2. |
| Grant of all things desired 2. | प्रवारणं[1] महादानं[2] सङ्कल्पः[1] कर्म मानसम्[2] ॥७७३॥ | Resolve 2. |
| Readily prepared 2. | अनायासार्थकं[1] फाण्टमन्तर्गडु[2,1] निरर्थकम्[2] । | Useless 2. |
| Independence 3. | स्वाच्छन्द्यं[1] निर्निमित्तं[2] च यदृच्छेत्यभिधीयते[3] ॥७७४॥ | |

a तुन्नं क्षिप्तं नुन्नं b शन्नं शांतं c शिक्यितं, सिक्यितं d गुडिनं e सुरङ्गा ।

| | | |
|---|---|---|
| First 2. | आद्यमादिममन्त्यं स्यादन्तिमं चाग्र्यमग्रिमम् । | Last 2; prior 2. |
| Middle 2. | मध्यमं मध्यमीयं च मध्यन्दिनमुदाहृतम् ॥७७५॥ | Midday, noon. |
| Adoration, reverance 2. | नमस्या वन्दना प्रोक्ता तपस्या [a] नियमस्थितिः । | Steady observance of religion 2. |
| Renunciation of the world; ascetic devotion; religious austerity 2. | परिव्रज्या व्रतादानं [b] व्रज्याऽटचा च गतिः स्मृता ॥७७६॥ | Walking. or the habit of roaming as a religious mendicant 2 |
| Empty 2. | रिक्तं तुच्छमसारं तु फल्गु [c] व्युष्टिः फलं स्मृतम् । | Vain 2. Result, product 2. |
| Inaccesisble 2. | कलिलं गहनं प्रोक्तं श्लथं शिथिलमुच्यते ॥७७७॥ | Loose, lax 2. |
| Independence of action 2. | स्वतन्त्रवृत्तिर्व्युत्थानमभ्युत्थानं च गौरवम् । | Dignity, respect 2. |
| Disposition 2. | संस्थानं संनिवेशः स्यादास्थानं नृपतेः सभा ॥७७८॥ | A royal waiting room 2. |
| Conversation 2. | सङ्कथान्योन्यसङ्गीतिः प्रतिपत्तिः प्रगल्भता । | Decision 2. |
| Effort 2. | उच्यत ऊर्जं उत्साहो [d] भृकुटिर्भ्रुकुटिस्तथा ॥७७९॥ | Frown 2. |
| Disunion 2. | उपजापो भवेद्भेदः साम सान्त्वमिति स्मृतम् । | Conciliation 2. |
| Trust, confidence2. | तथेति प्रत्ययः श्रद्धा संस्कारो वासना स्मृता ॥७८०॥ | The realising of past perception 2. |
| Got, obtained. | स्मृतमास्थितमाक्रान्तं [e] प्रतीष्टं पतदाहृतम् । | Accepted, received. |
| Covered 2. | प्रच्छादितं स्यात्संवीतं प्रशस्तं संस्कृतं स्मृतम् ॥७८१॥ | Excellent 2. |
| Snare, a trap 2. | उन्माथः कूटयन्त्रं [f] स्यादवपातोऽवटः स्मृतः । | A hole or cavity 2. |
| Nature 3. | धर्मः स्वभावः आत्मा [g] स्यादवेक्षा प्रतिजागरः ॥७८२॥ | Attention, watchfulness 2. |
| Unkind, harsh 2. | स्मृतं परुषमस्निग्धमाचारातिक्रमः [h] क्रिया । | Areligious rite. |
| Quick,expeditious2. | उच्चण्डमप्रलम्बं स्यान्माढिः [i] पत्रशिरा स्मृता ॥७८३॥ | The vein of a leaf 2. |

a नियमः स्थितिः b व्रज्याद्या, मीज्याज्या c व्युष्टचुफलं, व्युष्टिफल, व्युष्टफलं d भ्रुकुटिर्भ्रूकुटि, उत्साहो श्रुकुटि, भृकुटिर्भ्रकूटि e प्रतिष्ठं तु पदाध्रुतं, प्रतिष्टं तु यदाध्रुतं, प्रतीष्टं पतदाहृतं f स्यादवतापो, स्यादवपानो, स्यादवढः स्मृतः g स्यादपेक्षा, स्यादवेक्षा h माचारोतिक्रमः, माचारातिः कमक्षया i पत्रशरा ।

Emulation, Competition, assertion of superiority.

अहमहमिका[1] तु सा स्याद्यत्क्रियते स्पर्धयाधिकं[a] किञ्चित् ।

यत्र वृथाभिनिवेशस्तामाहोपुरुषिकां[1] विदुः प्राज्ञाः ॥७८४॥

Great self conceit or pride.

A war-cry 2.

सिंहनादो[1] भवेत् क्ष्वेडा[2] गण्डूषो[1] मुखपूरणम्[2] ।

A handful of water for rinsing the mouth 2.

Power 3.

प्रभावतां[b 1] वदन्त्यार्याः प्रभुतां[2] प्रभविष्णुताम्[3] ॥७८५॥

Superiority 2.

परभागो[1] गुणोत्कर्षः[2] स्पर्धा[1] संहर्ष[2] उच्यते ।

Rivalry 2.

Length 2.

आयामः[1] स्मृत आनाहः[2] परिणाहो[1] विशालता[2] ॥७८६॥

Width, breadth 2.

इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालयां
सामान्यकाण्डं चतुर्थं समाप्तम् ॥ ४ ॥

a स्पर्द्धया किंचित्, स्पर्द्धयाधि किंचित्　b प्रभावती ।

# पञ्चममनेकार्थकाण्डम्

एकोऽर्थो[a] बहुभिः शब्दैः कथितः कथ्यतेऽधुना ।
एकस्यैव तु शब्दस्य बहुष्वर्थेषु वर्तनम् ॥७८७॥

| | | |
|---|---|---|
| (1) Shiva. | रुद्रेऽपि[1] **खण्डपरशुर्**[1]**वैश्रवणेऽप्येककुण्डलः** प्रोक्तः । | (1) Kubera. |
| (1) Door, gate. | द्वारेऽपि[1] **प्रतिहारः**[b] प्राकाराग्रेऽपि[c][1] **कपिशीर्षम्** ॥७८८॥ | (1) The coping of a wall. |
| (1) Enough. | पर्याप्तेऽपि[1] **कृतं** स्यादाहवनीयादिषु[1] त्रिषु **त्रेता** । | (1) The three sacred fires. |
| (1) Doubt. | सन्देहेऽपि[1] **द्वापरमाहुः** कलहेऽपि[1] **कलिशब्दम्** ॥७८९॥ | (1) War, battle. |
| (1) An army. | सेनायामपि[1] **कटकं** **प्राणिद्यूतं** वदन्ति युद्धेऽपि[1] । | (1) War. |
| (1) Demons. | रक्षस्यपि[1] **पुण्यजनं** मृद्भाण्डेऽप्युष्ट्रिकामार्याः[1] ॥७९०॥ | (1) An earthen vessel. |
| (1) Silver. | **श्वेतं** रजतेऽप्युक्तं[1] **रजतं** हारे[1] शरेऽपि[1] **किंशारुः** । | (1) Necklace. (1) An arrow. |
| (1) Hypocrisy. | दम्भेऽपि[1] **गह्वरं** स्यादुपह्वरं सन्निधानेऽपि[1] ॥७९१॥ | (1) Vicinity. |
| (1) An eyelid. | नयनच्छदेऽपि[1] **वर्त्म** **प्रतिग्रहः** सैन्यपृष्ठभागेऽपि[1] । | (1) The rear of an army. |
| (1) Phlegm. | श्लेष्मण्यपि[1] **खेटः** स्याज्जामिः कुलबालिकायां[1] च ॥७९२॥ | (1) A respectable woman. |
| (1) A little, the mere scent of a thing. | **गन्धो** लेशेऽप्युक्तः[1] करुणाप्रतिपादने[1] **तपस्वी** च । | (1) Exciting pity, pitiable. |
| (1) The distance from the wrist to the tip of the little finger. | मणिबन्धकनिष्ठिकयोर्मध्यविभागेऽपि[1] **करभः** स्यात् ॥७९३॥ | |

a एकार्थो b प्रतीहारः c प्राकाराग्रेपि कीर्तितम् ।

| | | |
|---|---|---|
| (1) Consideration, reflexion. | चिन्तायामपि **चर्चा** **जगती** [a]राजप्रधानलोकेऽपि । | (1) The king and his subjects. |
| (1) The menses. | **ऋतु**[1]रङ्गनारजस्यपि **विकटं** [1]श्रेष्ठेऽपि निर्दिष्टम् ॥७९४॥ | (1) Excellent. |
| (1) Mail, armour. | [1]कवचेऽपि **वारवाणं** **जीमूतं** [1]पर्वतेऽपि कथयन्ति । | (1) a muntains. |
| (1) The array or arrangement of troops in particular position. | **व्यूहं** [1]रचनायामपि दार्वाघाटेऽपि **शतपत्रम्** ॥७९५॥ | (1) The wood-peckers. |
| (1) The body. | **करणं** [1]कायेऽपि स्यादुष्णीषो मूर्धवेष्टनेऽप्युक्तः । | (1) A turban. |
| (1) Goods, property. | **मात्रा** [1]परिच्छदेऽपि **क्षुद्रः** [1]क्रूरे [1]श्रुतौ **निगमः** ॥७९६॥ | (1) Cruel. (1) The vedas. |
| (1) Curled hair. | **वृजिनः** [1]केशेऽप्युक्तः **स्थाणुः** [1]कीलेऽपि [1]कुञ्जरे **नागः** । | (1) A stake. (1) An elephant. |
| (1) A store room. | **गञ्जो** [1]भाण्डागारे **गोमुख**[1]मुपलेपनेऽपि स्यात् ॥७९७॥ | (1) Ointment. |
| (1) Splendour, light. | [1]तेजस्यपि **धाम** स्यादा[1]धारेऽप्य**आशयो** **घटा** [1]गोष्ठयाम् । | (1) A receptacle. (1) An assembly. |
| (1) A noble, woman. | **कुल्या** [1]कुलस्त्रियामपि **तारो**[b] [1]मुक्तागुणेऽप्युक्तः ॥७९८॥ | (1) A large pearl. |
| (1) The result of actions. | [1]कर्मविपाकेऽपि **दशागती** स्मृते [1]काननेऽपि **दवदावौ** । | (1) A forest. |
| (1) The head. | **चूडाशिखे** [1]शिरस्यपि [1]हस्तिन्यां **धेनुकागणिके**[c] ॥७९९॥ | (1) The female elephant. |
| (1) Intellect; intelligence. | **प्रतिपत्**[1]प्रति[2]पत्तावपि **शादः** [1]शष्पे **घृणा** [2]जुगुप्सायाम् । | (1) Young grass (2) Disgust. |
| (1) High, tall. | **उत्ताल**[1]मुन्नतेऽपि [1]श्रेष्ठेऽपि निगद्यते **सुरभिः** ॥८००॥ | (1) Excellent. |
| (1) A year. | **संवर्तः** **परिवर्तश्च** [1]हायने कथ्यते[1]ऽम्बरे **नाकः** । | (1) Sky, heaven. |
| (1) A measure of quantity. | [1]परिमाणेऽपि **प्रस्थः**[d] [1]सर्वात्मनि **सर्वसन्नाहः** ॥८०१॥ | (1) The universal spirit. |
| (1) a wife. | [1]पत्न्यामपि **द्वितीया** दर्भेऽपि **पवित्रमवधिर**[1]वटेऽपि । | (1) Kusha grass. (1) A pit, a hole. |
| (1) Natured. | [1]प्रकृतावपि **प्रधानं** **विवक्षितं** [1]शोभनेऽपि स्यात् ॥८०२॥ | (1) Handsome. |
| (1) Excessive. | अतिमात्रेऽप्य**तिवेलं** [1]कायेऽप्युत्सेध इष्यते सद्भिः । | (1) The body. |
| (1) The spine. | [e][1]पृष्ठास्थन्यपि **वंशः** **कदली** [1]करिवैजयन्त्यां च ॥८०३॥ | (1) A flag carried by an elephant. |

a रा प्रधानं, राप्रधानं b तारा, धातारो c धेनुका गणिका d प्रस्थं e पृष्टास्थिन्यपि ।

| | | |
|---|---|---|
| (1) Deception. | जालं कपटेऽप्युक्तं कपालमुक्तं घटादिशकलेऽपि । | (1) A fragment of earthen pot. |
| (1) Sin. (2) Misfortune. | रिष्टं पापाशुभयोररिष्टमशुभेऽपि निर्दिष्टम् ॥८०४॥ | (1) Misfortune. |
| (1) Diffusion. | व्यासेऽपि विग्रहः स्यान्मानविशेषेऽपि पौरुषव्यामौ । | (1) Measure. |
| Resolution. | हेला प्रस्तावेऽपि प्रग्रह आबन्धनेऽप्युक्तः ॥८०५॥ | Captive, prisoner. |
| (1) An elephant's trunk. | कुञ्जरकरेऽपि शुण्डा[a] ग्रावा शैले भवश्च संसारे । | (1) A mountain. (1) The world. |
| (1) Young. | बालेऽपि बालिशः स्यात्कलधौतं शातकुम्भेऽपि ॥८०६॥ | (1) Gold. |
| Branch. | शाखायामपि परिधिर्वसतिर्जैनाश्रमेऽपि निर्दिष्टा । | A Jain monastery. |
| (1) Searching. | अन्वेषणेऽपि मार्गो भद्रो[b] वृषभे वके ध्वाङ्क्षः ॥८०७॥ | (1) A bull. (1) A crane. |
| (1) A defect in a jewel. | मणिदोषेऽपि त्रासो वत्सः संवत्सरेऽपि निर्दिष्टः । | (1) A year. |
| (1) Adverse. | वामः प्रतिकूलेऽपि प्रोक्तौ शुक्लेऽपि शुचिरामौ ॥८०८॥ | (1) White, bright. |
| (1) Yesterday. | ह्यस्तनदिनेऽपि कल्यं नेत्रं मूले रजस्यपि परागः । | (1) Dust, powder. |
| (1) Pregnant. | भ्रूणो गर्भिण्यामपि भूतिर्विभवे बलः[c] काके ॥८०९॥ | (1) Grandeur. (1) A crow. |
| (1) A tableland. | गिरिसानुन्यपि वप्रं तल्पं दारेषु चक्षुषि ज्योतिः । | (1) A wife. (1) Eye. |
| (1) Injuring by theft. | चौर्यादावपि हिंसा प्रसरः प्रणयेऽपि निर्दिष्टः ॥८१०॥ | (1) Affectionate solicitation. |
| Group, mass. | संघातेऽपि ग्रामो भूतेन्द्रियशब्दविषयकरणानाम् । | (1) The complex of visible objects. (1) Senses. |
| Combined with names of trees it signifies a multitude. | षण्डश्च[d] पादपानां स्कन्धः करिनरतुरङ्गाणाम् ॥८११॥ | (1) Signifying a multitude after. करि, नर and तुरङ्ग । |
| 10 Different kinds of trees. | नन्द्यावर्तः सरलः[e] शालः काको धवोऽञ्जनस्तिलकः । | |
| | पद्मस्पन्दनमोक्षा वृक्षविशेषेऽपि दृश्यन्ते ॥८१२॥ | |
| Fragrant. | कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः । | |
| Splendour, elegance, beauty. | शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिविभ्रमाः ॥८१३॥ | |

a सुंडा b रुद्रो वृषभे c बलः काले, वलिः काके, वलिकाले d खंड पादानां e सरलः शालः शाकोथवार्जुनतिलकः, सरलः शाकोथ-वार्जुनस्तिलकः, सरलः शालः शाको धवोऽजनस्तिलकः ।

| | | |
|---|---|---|
| (1) A guard of the woman's apartment. | आर्यः स्यात्सौविदल्लेऽपि[1] व्रीहावप्यणुरिष्यते । | (1) A kind of grain. |
| (1) A man of a low and impure tribe. | चण्डालेऽपि दिवाकीर्तिर्विवस्वान् देवतास्वपि[1] ॥८१४॥ | (1) A deity, a god. |
| (1) Affection. | स्नेहेऽप्यपह्नवः[1] प्रोक्तो द्वेषेऽप्यनुशयः[1] स्मृतः । | (1) Enimity. |
| (1) Sexual intercourse. | सुरतेऽपि[1] व्यवायः स्यान्निगमश्च ऋतावपि[1][a] ॥८१५॥ | (1) A road. (2) The vedas. (3) A trader. |
| 1) A difficult road. | दुर्गमार्गेऽपि[1] कान्तारं गृहवाटयां[1] च निष्कुटः । | (1) A garden attached to a house. |
| (1) An animal, a beast. | रूपं मृगेऽपि[1] विज्ञेयं बभ्रुः स्यान्नकुलेऽपि[1] च ॥८१६॥ | (1) A mongoose. |
| (1) The intestines. | अन्तर्देहेऽपि[1] कोष्ठः स्याच्चत्वरं प्राङ्गणेऽपि[1] च । | (1) A court yard. |
| (1) Leprous. | दुश्चर्मण्यपि[1] निर्दिष्टः शिपिविष्टो मनीषिभिः ॥८१७॥ | |
| (1) A couch | संस्तरः प्रस्तरेऽप्युक्तो[1] हनौ[1] कुब्जो रणे[1] स्पशः । | (1) The jaw. (1) War, battle. |
| (1) A thunder cloud. | गर्जन्मेघेऽपि[1] पर्जन्यः सन्धा स्यादवधावपि[1] ॥८१८॥ | (1) A limit. |
| (1) Settled occupations, proper conduct. | व्यवस्थायां[1] च संस्था स्यात्संवित्तावपि[b] वेदना । | (1) Perception, experience. |
| A march on. | यात्रा स्यादनुवृत्तौ[1] च संज्ञायां[1] च समाह्वयः ॥८१९॥ | (1) Name, appellation. |
| (1) Impotent. | क्लीबो विक्रमहीनेऽपि[1] समयेऽपि[1] कटः स्मृतः । | (1) Time. |
| (1) A stain, spot. (2) A fault. | कलङ्कं[c] लाञ्छने[1] दोषेऽप्य[2]द्रिः प्रोक्तो रवावपि ॥८२०॥ | (1) The sun. |
| (1) Meeting. (2) Assembly. | समितिः सङ्गति[1]सभयोः[2] ककुदं श्रृङ्गे[1] विदुः[d] प्रधानेऽपि[2] । | (1) The top of a mountain (2) Eminence, superiority. |
| (1) Pride, conceit. (2) An instrument for cleaning stones. | टङ्कः स्यादभिमाने[1] प्रस्तरघटनोपकरणे[2] च ॥८२१॥ | |
| (1) A sign. (2) Consciousness. | सङ्केते[1] चैतन्ये[2] च सूरिभिः कथ्यते तथा संज्ञा । | |
| (1) Punishment. (2) An army. | दण्डो दमने[1] सैन्ये[2] कुतपो दर्भेऽपराह्णे[1] च ॥८२२॥ | (1) Kush grass. (2) After noon. |
| (1) Compassion, pity, kindness. | कारुण्येऽप्यनुषङ्गः[1] स्यात्प्रोक्तो गुह्येऽप्यवस्करः[1] । | (1) A privity. |
| (1) Signet ring. | वेदिकाऽङ्गुलिमुद्रायां[1] लाक्षायां[1] च कृमिस्तथा ॥८२३॥ | (1) Lac. |

a दृतावपि b देवनम् c कललं d विदुः प्रभावेऽपि ।

| | | |
|---|---|---|
| (1) Capital, stock, | नीवी परिपणे[1]ऽप्युक्ता[a] कटिदेशे[1]ऽपि मेखला । | (1) Loins. |
| (1) Privation. (2) Separation. | प्रत्यवाये[1]ऽपि विश्लेषे[2] विधुरं स्मर्यते बुधैः ॥८२४॥ | |
| (1) End. | निदानमवसाने[1]ऽपि स्वामिन्यपि[1] भवेदिनः । | (1) A master, a lord. |
| (1) Bard. (2) Old, ripe. | जठरः कठिने[1]ऽप्युक्तः प्राज्ञैः परिणते[2]ऽपि च ॥८२५॥ | |
| (1) Time. (2) Ordinance. | काले[1] कल्पे[2]ऽपि विधिर्घनाघनः[b] शक्र[1][c]वर्षुकाम्बुदयोः[2] । | (1) Indra. (2) Rainy cloud. |
| (1) Distress. (2) Transgression. | अत्ययशब्दः प्राज्ञैः कृच्छ्रे[1] चातिक्रमे[2] च निर्दिष्टः ॥८२६॥ | |
| (1) The belly. (2) Water. | उदरे[1] जले[2] कूपीटं सम्बाधः सङ्कटे[1] भगे[2]ऽप्युक्तः । | (1) Narrow. (2) Vulva. |
| (1) The rear of an army (2) The rear of a battle. | पार्ष्णिः प्रत्यासारे[1] च रणस्य च पश्चिमे[2] भागे ॥८२७॥ | |
| (1) Sexual intercourse. (2) Enjoyment. | रति[1]भुक्तयोः[2] सम्भोगः पथिदेये[1] स्त्रीधने[2] च शुल्कं स्यात् । | (1) Toll, custom, duty. (2) The property of the wife, |
| (1) The shoot of a bamboo. (2) A shrub. | वंशाङ्कुरे[1] करीरं वृक्षविशेषे[2]ऽपि कथयन्ति ॥८२८॥ | |
| (1) Race, family. (2) Disposition. | अनूकमन्वये[1] शीले[2] गोत्रं नाम्नि[1] तथान्वये[2] । | (1) Name. (2) Race, family. |
| (1) A lump of boiled rice. | पुलाकं भक्तसिक्थे[1] च क्षुद्रधान्ये[2] च कथ्यते ॥८२९॥ | (2) Shrivelled grain. |
| (1) An improper act. (2) A privy part. | अकार्ये[1] गुह्ये[2] कौपीनं कीलालं रुधिरे[1] जले[2] । | (1) Blood. (2) Water. |
| (1) A hole filled with stake. (2) Conflagration of husk. | कुकूलं शङ्कुमद्गर्ते[1] तुषाग्नौ[2] च निगद्यते ॥८३०॥ | |
| (1) A building containing an image of Buddha. | चैत्यं बुद्धाण्डके[d][1]ऽप्युक्तं देवतायतने[2] तथा । | (2) A temple. |
| (1) Mushroom. (2) A sort of tree. | छत्रके[1] वृक्षजातौ[2] च शिलीन्ध्रं[e] स्मर्यते बुधैः ॥८३१॥ | |
| (1) Prodigal. (2) A beast of prey. | अर्थव्ययसहे[1] व्यालस्तथा हिंस्रपशौ[f][2] स्मृतः । | |
| (1) A ploughshare (2) The snout of a hog. | पोत्रमित्युच्यते प्राज्ञैर्हल[1]शूकरयोर्[2]मुखम् ॥८३२॥ | |
| (1) Slow. (2) Free. | मन्द[1]स्वच्छन्दयोः[2] स्वैरं कक्षः स्यात्कच्छ[1]वीरुधोः[2] । | (1) The hem of an ornament or garment. (2) The creeper. |
| (1) The male elephant. (2) The female elephant. | करेणुर्गज[1]हस्तिन्योः[2] पीलुश्च गज[1]वृक्षयोः[2] ॥८३३॥ | (1) The elephant. (2) A kind of tree. |

a प्युक्तः, युक्तः b विधिर्धमार्घनः, विधिनाद्यनः, विंविधिनाद्यनः, विधिनाघनः c शक्रवर्ष d बुद्धांडके, बुद्धाडके, बुधांडक e शलन्ध्रं, शिलिंध्र, शिलन्ध्रं, f हिंस्रः ।

| | | |
|---|---|---|
| (1) A Spike. (2) A Javelin. | शलाका[1]युध[2]योः शल्यं बाधा दुःख[1]निषेध[2]योः । | (1) Pain, trouble. (2) Hindrance, prohibition, opposition. |
| (1) A pillar. (2) Fixedness in stupor. | स्थूणा[1]स्तब्ध[2]त्वयोः स्तम्भ इला वाग[1]घ्न्य[2]योरपि ॥८३४॥ | (1) Speech. (2) A cow. |
| (1) Worship. (2) Price. | अर्चना[1]मूल्य[2]योरर्घौ विसर्गौ मुक्ति[1]वर्चसोः[2] । | (1) Giving up. (2) Excrements. |
| (1) Name of a saint. (2) A cock. | मुनि[1]कुक्कुट[2]योर्दक्षः सन्धिः संश्लेष[1]रन्ध्र[2]योः ॥८३५॥ | (1) Union. (2) A crack. |
| (1) Surely, positively. (2) Much, exceedingly. | अवश्य[1][a]भृश[2]योर्बाढं दायाद[1]स्तुक्सपिण्ड[2]योः । | (1) Male offspring. (2) A kinsman. |
| (1) Of noble descent. (2) Excellent. | कुलीन[1]श्रेष्ठ[2]योर्जात्यं कोटिरुत्कर्ष[1][b]संख्य[2]योः ॥८३६॥ | (1) Excellence. (2) Ten millions. |
| (1) One of Shiva's attendant. (2) Shiva. | [c]ब्रध्न[1]स्तण्डु[2]गिरिशयोः स्थितिः स्थान[1]व्यवस्थ[2]योः । | (1) Standing place. (2) A rule management. |
| (1) Man festation. (2) Privacy. | [d]वीकाशः स्फुट[1]रहसोः[2] काष्ठा काल[1]प्रकर्ष[2]योः ॥८३७॥ | (1) A measure of time. (2) Excellence. |
| (1) A river. (2) A sea. | नदी[1][e]समुद्र[2]योः सिन्धुर्देश[1]पर्वत[2]योर्मरुः । | (1) A desert. (2) A mountain. |
| (1) Pairing connection. (2) Sexual intercourse. | मैथुनं कथ्यते सद्भिः सम्बन्ध[1]ग्राम्यधर्म[2]योः ॥८३८॥ | |
| (1) Crookedly. (2) Binding. | प्र[1]ह्व[2]बन्धनयोः प्राध्वं मोहः स्यान्मौढ्य[1][f]मूर्छ[2]योः । | (1) Folly. (2) Loss of consciousness. |
| The ebb and flow of the Sea. | व्यवस्थाने[1]ऽम्भसो [g]वेला [h]रविः पर्वत[1]सूर्य[2][3]योः ॥८३९॥ | (1) Mountain. (2) The sun. |
| (1) Fire. (2) Meteor. | अग्न्युत्पातौ[1][2] धूमकेतू श्वशुर्यौ श्याल[1]देवरौ[2] । | (1) Wife's brother. (2) Husband's. brother. |
| (1) An ordeal. (2) A treasury. | दिव्यार्थ[1]संग्रहौ[2] कोशौ नरेन्द्रौ नृप[1]वार्त्तिकौ[2] ॥८४०॥ | (1) A king. (2) A conveyor of news or intelligence. |
| | आडम्बरो गजानां [i]पटह[1]रवे गर्जिते[2] प्रपञ्चे[3] च । | (1) The sounding of a trumpet. (2) The roaring of elephants (3) A show. |
| (1) Planet. (2) An imp, evil spirit (3) Perseverance. | ग्रहशब्दः सूर्यादिषु[1] भूतादिषु[2]अभिनिवेशे[3] च ॥८४१॥ | |
| (1) The supreme spirit (2) A fool (3) Indistinct, unclear. | अव्यक्तः परमात्मनि[1] मूर्खे[2] स्पष्टेतरे[3] च निर्दिष्टः । | |
| | कक्षा गुह्यपिधाने[1] काञ्च्यां[2] गेहे[3] [j]प्रकोष्ठे च ॥८४२॥ | (1) A piece of cloth worn between the legs to conceal privities (2) A girdle (3) A court in a palace. |
| (1) Elaboration, preparation. (2) Desire, wish. (3) The taking prisoner. | प्रतियत्नः संस्कारे[1] लिप्सो[2]पग्रहण[3]योश्च निर्दिष्टः । | |
| (1) The arming for a battle. (2) An attack. (3) Robbing. | अभिहारः सन्नाहे[1] स्यादभियोगे[2] परस्वहरणे[3] च ॥८४३॥ | |

a अवश्यं b कोटिरुत्कर्षशंखयोः c बुघ्नस्तंडु, ब्रघ्नस्तंडि, ब्रघ्नस्तुंडु d विकाश e समुद्रनदयोः f मूर्खयोः, मौर्ष्ययोः g हसो वला, हसोर्वेला, h सूर्यपर्वतयो रविः i पटहः स्वे, पटहः खे j गेहप्रकोष्ठे इत्यपि पाठः ।

| | | |
|---|---|---|
| (1) A special present. (2) Taking, receiving. | दानविशेषे[a 1] लब्धौ[2] **दायो** भागार्ह[3]पित्र्यरिक्थे[b] च । | (3) Patrimony. |
| (1) A line in a manuscript consisting of about 32 syllables. | लिपिसंख्यायां[1] शास्त्रे[2] द्रव्ये[3] च **ग्रन्थ**शब्दमिच्छन्ति[c] ॥८४४॥ | (2) A code. (3) Substance. |
| (1) Gambling (2) Die. | द्यूता[1]क्ष[2]सारिफलका[3]स्त्रयोऽप्या**कर्ष**संज्ञकाः । | (3) A draught-board. |
| (1) Connexion, association (2) Defeat. | संसर्गा[1]भिभवा[2]क्रोशे[3]ष्व**भिषङ्गः**[d] प्रकीर्त्तितः ॥८४५॥ | (3) Reviling, imprecation. |
| (1) A son of त्वष्टृ the perpetual enemy of Indra. | त्वाष्ट्रे[1] तमसि[2] शत्रौ[3] च वृत्रशब्दस्त्रिषु स्मृतः । | (2) Darkness. (3) An enemy. |
| (1) Depression, sorrow (2) Sacrifice (3) Anger. | **मन्यु**र्दैन्ये[1] क्रतौ[2] कोपे[3] नाडी[1]स्वर्ग[2]क्षिति[3]ष्व**िडा** ॥८४६॥ | (1) An artery (2) Heaven (3) The earth. |
| | उक्तानामप्यनुक्तानां शब्दानामिह संग्रहः । | |
| (1) Pleasure (2) Wind (3) Water. | **कशब्दः** सुख[1]वाय्व[2]म्बु[3]ब्रह्म[4]मस्तक[5]वाचकः ॥८४७॥ | (4) The god Brahma. (5) Head. |
| (1) An oath. (2) understanding. (3) Cause. | **प्रत्ययाः**[e] शपथ[1]ज्ञान[2]हेतु[3]विश्वास[4]निश्चयाः[5] । | (4) Trust. (5) Certainty. |
| (1) Expansion. (2) Awning. (3) Empty. | विस्तारे[1] कदके[2] शून्ये[3] **वितानं** स्यात्क्रतौ[4] क्षणे[5] ॥८४८॥ | (4) Sacrifice. (5) Opportunity. |
| (1) A side (2) Fortnight. | देहावयव[1]मासार्ध[2]पतत्र[3]गृहभित्तिषु[4] | (3) Wing (4) The wall of a house. |
| (5) A follower. | परिग्रहे[5] समीपे[6] च **पक्षः** षट्सु निगद्यते ॥८४९॥ | (6) Neighbourhood. |
| (1) Fire (2) Wealth (3) The rays of the sun. | अग्नि[1]धन[2]रश्मि[3]रत्न[4]त्रिदशविशेषेषु[5] भवति **वसु**शब्दः । | (4) A jewel, gem. (5) A class of gods 8 in number. |
| (1) Motion, action (2) Nature, character (3) Origin. | चेष्टा[1]त्म[2]जन्म[3f]सत्ता[4]भिप्राये[5]ष्वभिहितो **भावः** ॥८५०॥ | (4) Existence (5) meaning, purport. |
| (1) A measure of time equal to 4 minutes. | कालविशेषे[1]ऽवसरे[2]ऽव्यापारे[3] पारतन्त्र्ये[4] च । | (2) Opportunity. (3) Leisure. (4) Dependence. |
| (5) Middle. | मध्ये[5] तथोत्सवे[6] च **क्षण**शब्दः कथ्यते[g] सद्भिः ॥८५१॥ | (6) Festival. |
| (1) Custom. (2) Senses. | आचारे[1] नयनादौ[2] द्यूतविशेषे[3] तथा रथावयवे[4] । | (3) Playing at dice (4) An axle. |
| (5) Terminelia Balaria. | **अक्षं** विंभीतकेऽपि[5] प्रयुञ्जते[h] पञ्चसु प्राज्ञाः ॥८५२॥ | |
| (1) Trouble (2) End (3) Good conduct. | **निष्ठा** क्लेशे[1]ऽवसाने[2] च व्यवस्थो[3]त्कर्षयो[4]र्व्रते[5] । | (4) Excellence. (5) A vow. |
| (1) Excellent (2) Power (3) Wealth. | श्रेष्ठे[1] स्थाम्नि[2] धने[3] शुक्रे[4 i] मज्ज्ञि[5] **सार** उदाहृतः ॥८५३॥ | (4) Semen, virile.; (5) Marrow. |

a दाने विशेषे, दाने विशेषलब्धौ b पितृऋक्थे, पितृरिक्थे c ग्रन्थमिच्छन्ति d भिष्वङ्गः e प्रत्ययः f जन्ममत्वाभिप्रायेष्व g कथ्यते कृतिभिः h प्रयुज्यते i शुक्ले, शुल्के ।

(1) A quarter (2) Eye (3) Rays of the sun (4) Heaven. (9) The earth. (10) A cow.

दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु
भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृतः ॥८५४॥

(5) Thunder bolt (6) Speech (7) An arrow (8) Water.

(1) An ornament. (2) A tail. (3) Excellent (7) A flag (8) Mark, sign (9) Horse.

भूषायां लाङ्गूले प्रधानशृङ्गप्रभावपुण्ड्रेषु ।
ध्वजलक्ष्मतुरङ्गेषु च नवसु ललामं[a] प्रचक्षते प्राज्ञाः ॥८५५॥

(4) Horn (5) Power. (6) A mark on the forehead.

(1) The sun (2) A monkey (3) Frog. (7) A horse. (8) Lion.

अर्कमर्कटमण्डूकविष्णुवासववायवः ।
तुरङ्गसिंहशीतांशु[b]यमाश्च हरयो दश ॥८५६॥

(4) Vishnu (5) Indra (6) Wind. (9) The moon. (10) Pluto, Yama.

(1) An element of which five are enumerated (3) A metal (4) Natural condition.

पृथिव्यादिषु भूतेषु शरीरेषु रसादिषु ।
लोहेषु च स्मृतो धातुः स्वभावे गैरिकादिषु ॥८५७॥

(2) A constituent part of the body. (5) Mineral ore.

(1) The tip of an elephant's trunk (2) A lotus (3) The blade of a sword. (6) A medicine. (7) Water.

द्विरदकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे ।
अगदे जले च तीर्थे पुष्करमष्टासु निर्दिष्टम् ॥८५८॥

(4) The sky (5) The head of a drum. (8) A place of pilgrimage.

(1) A living being. (3) Passed (4) An evil spirit in attendance on Rudra.

चतुर्विधेषु जीवेषु पृथिव्यादिषु पञ्चसु ।
अतीते देवयोनौ च भूतशब्दं प्रचक्षते ॥८५९॥

(2) An element.

(1) Colour (2) Caste (3) Beauty, splendour. (6) Arrangement of a song (7) Praise (8) Dress.

शुक्लादौ ब्राह्मणादौ च शोभायामक्षरे व्रते ।
गीतक्रमे स्तुतौ वेषे[c] वर्णशब्दं प्रचक्षते[d] ॥८६०॥

(4) Letter (5) Vow.

(1) A sentiment of which 9 are enumerated. (5) Juice (6) Semen, virile (7) Quality (8) Any constituent part of the body

शृङ्गारादिषु नवसु च [e]लवणादिषु षट्सु पारदे रागे ।
[f]निर्यासवीर्यगुणधातुविषघृतादौ रसः प्रोक्तः ॥८६१॥

(2) Taste (3) Mercury, quicksilver affection (4) Love. (9) Poison (10) Melted butter, Ghee.

(1) Vulva (2) A landing place at a river's side. (4) A holy place. (5) A vessel.

योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि ।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेषु च ॥८६२॥

(3) A minister and 18 other officers of state. (6) A school of Philosophy.

a ललामं च b सीताशुर्यमा हरयो, सीताशुरर्यमा हरयो c वर्षे d प्रयुंजते e लवणादिषु पारदे, लवणादिकषट्सु पारदे, लवणादिषु न सु, नवसु, लवणादिपु षट्सु पारदे च f निर्यासि गुणवीर्यें, गुर्णवीर्य, धातुगुणवृतादौ रसः शब्दः, निर्यासगुणवोर्य धातुविषघृतादौररसः प्रोक्तः, निर्यासवीर्यगुणधातुविषघृतातौ रसः प्रोक्तः ।

| | | |
|---|---|---|
| (1) A vowel (2) A musical note. | अकारादिषु[1] वर्णेषु षड्जादिषु[a][2] च सप्तसु । | |
| (3) Accent (4) Articulate sound. | उदात्तादिषु[3] विज्ञेयः प्राणिनां[4] च स्वने **स्वरः** ॥८६३॥ | * (i) Goodness (ii) foulness and (iii) darkness. |
| (1) The equipoise of the 3 qualities of nature viz. * | सत्त्वादीनां साम्यावस्थां[1] **प्रकृतिं** वदन्ति तत्त्वज्ञाः । | |
| (2) A citizen. (3) A minister. (4) A cause. | पौरामात्यादीनि[2][3] च कारणकारुस्वरूपाणि[4][5][6] ॥८६४॥ | (5) A mechanic (6) The natural form. |
| (1) The 3 qualities of nature (2) Shape. | सत्त्वादौ[1] रूपादौ[2] शौर्यादौ[3] तन्तुषु[4][b] प्रयोगज्ञाः । | (3) Heroism. (4) Cord or string. |
| (5) A bowstring. | **गुणशब्दं** सिञ्जिन्यां[5] प्रयोजयन्त्यप्रधानेऽपि[6] ॥८६५॥ | (6) A subordinate quality or inferior degree. |
| (1) A tool (2) An agent (3) Wealth. | उपकरणे[1] करणे[2] च द्रविणे[3] लिङ्गे[4] च यातनायां[5] च । | (4) Penis. (5) Torture. |
| (6) A component part of an army. | सेनाङ्गे[6] संसिद्धौ[7] **साधनशब्दप्रयोगः** स्यात् ॥८६६॥ | (7) Accomplishment. |
| (1) Meaning. (2) Purpose. (3) Motive. | अभिधेयाभिप्रायप्रयोजनद्रव्यवाचकेष्वर्थः[1][2][3][c][4] । | (4) Wealth. |
| (1) Opportunity. (2) Multitude. | प्रस्तावे[1] संघाते[2] कुत्सायामायुधे[3][4] जले[5] **काण्डम्** ॥८६७॥ | (3) Censure (4) An arrow (5) Water. |
| (1) The holy scripture, the Vedas (2) The supreme spirit. | वेदाध्यात्मब्राह्मणहिरण्यगर्भेषु[1][2][3][4] कथ्यते **ब्रह्म** । | (3) A Brahman. (4) The creator of the universe. |
| (1) The 3 qualities of nature (2) Existence (3) Power. | प्रकृतिगुणे[1] सत्तायां[2] स्थामनि[d][3] भूते[4] च **सत्त्वं** स्यात् ॥८६८॥ | (4) Living being. |
| (1) The earth. (2) Speech (3) Food. | **इराशब्दो** बुधैर्ज्ञेयो भुवि[1] वाच्यशनेऽम्भसि[2][3][4] । | (4) Water. |
| (1) Time (2) Pluto. | निमेषादौ[1] यमे[2] वर्णे[3] **कालो** मृत्यौ[4] च कीर्त्यते ॥ | (3) Black. (4) Death. |
| (1) Time. (2) Convention. | कालसङ्केताचारसिद्धान्ताः[1][2][e][3][4] **समयाः** समाः[f] ॥८६९॥ | (3) Practice. (4) Dogma. |
| (1) A thread. (2) Mystic prayer. | **तन्त्रं**[g] तन्तुषु[1] मन्त्रेषु[2] सिद्धान्तपरिच्छदप्रधानेषु[3][4][5] । | (3) Established doctrine. (4) Retinue. (5) Chief. |
| (1) Effort (2) informing against. | उत्साहनसूचनयोः[1][2] प्रकाशने[3] **गन्धनं** प्रोक्तम् ॥८७०॥ | (3) Manifestation. |
| (1) Clothing (2) The middle (3) A hole. | वस्त्रे[1] मध्ये[2] तथा छिद्रे[3] व्यवधानेऽन्तरात्मनि[4][5] । | (4) Intervention. (5) The soul. |
| (6) Opportunity. (7) Connexion with the exterior. | अवकाशे[6] बहिर्योगे[7] विशेषेऽवसरेऽन्तरम्[8][9] ॥८७१॥ | (8) Difference. (9) Occasion. |

a खड्गादिषु b तन्तुषु च c प्रयोजद्रव्य प्रयोजनकचकचकश्चार्थः
d स्थाम्नि e चारे, सिद्धान्तसमयाः f स्मृताः g तन्त्रेषु ।

| | | |
|---|---|---|
| A particle. | प्रागेव नामपर्याये निपाताः केऽपि कीर्तिताः । | |
| Auspiciously. | कथ्यन्ते केचिदन्येऽपि **दिष्टया** स्यान्मङ्गलादिषु ॥८७२॥ | |
| A long time. | [a]चिराय चिररात्राय [1]दीर्घकाले प्रयुज्यते । | |
| (1) An alternative. (2) Analogy. | चिरं चिराच्चिरेणेति [b]**वा** [1]विकल्पो[2]पमानयोः ॥८७३॥ | |
| All round. | [1]परितः [2]सर्वतो [3]विष्वक् [4]समन्ताच्च [5]समन्ततः । | |
| (1) Visible. (2) Similar. | [1]प्रत्यक्ष[2]सदृशोः **साक्षा**[1]द्वार्त्ता[c 2]सम्भाव्ययोः **किल** ॥८७४॥ | (1) As reported (2) Probably. |
| (1) Grief (2) Joy. | [1]शोचने [2]सम्प्रहर्षे च [d]**हन्त**शब्दः प्रयुज्यते । | |
| (1) Grief (2) Anger. (3) Evidently. (4) Vicinity. | **ई** [1]दुःखभावने [2]क्रोधे [3]प्रत्यक्षे [4]सन्निधावपि ॥८७५॥ | |
| Without. | [1]पृथ[2]ग्विना[3]न्तरे[4]णर्ते [5]व्यतिरेकार्थवाचकाः । | |
| Repeatedly. | प्रत्यारम्भे [e]**मुहुः** प्रोक्तो **हुं** [1]सम्प्रश्न[2]वितर्कयोः ॥८७६॥ | (1) A question. (2) A doubt. |
| (1) According to tradition. | **इतिह** स्यात्[1]सम्प्रदाये **प्रेत्यामुत्र** [2]भवान्तरे । | (1) In the life to come (2) In a future world. |
| (1) Together. | (1)साकं (2)सार्धं (3)समं (4)सत्रं [1]सहार्थे सम्प्रकीर्तिताः ॥८७७॥ | |
| (1) Below, beneath. | अधरस्तादधरतः स्यादधस्तादधो[1]ऽधरे । | |
| (1) Therefore. | **अत** **इत्युच्यते** [1]हेतौ [1]निन्दायां [2]विस्मये **बत** ॥८७८॥ | (1) Disapproval. (2) Surprise. |
| (1) Near. | **समयानिकषाशब्दौ** [1]सामीप्ये कीर्तितौ बुधैः । | |
| (1) Perhaps. (2) Surely. | [f 1]तर्क[2]निश्चययोर्नूनं **कच्चित्**स्यात्[1]प्रश्न[2]काम[g]योः ॥८७९॥ | (1) A question. (2) Wish, desire. |
| (1) Doubt. | **आहो उताहो** [1]सन्देहे **नु** [h]**स्वित्**[1]प्रश्न[2]वितर्कयोः । | (1) Question. (2) A doubt. |
| (1) At present. (2) Fit, proper. | [1]वर्तमाने च [2]युक्ते च **साम्प्रतं** सम्प्रचक्षते ॥८८०॥ | |
| (1) Manifestly. (2) Origin. | [1]प्रकाशे [2]सम्भवे **प्रादुः** [1]प्रधान[2]सदृशोः **प्रति** । | (1) Chief. (2) Like. |
| (1) Distinction. (2) Cause. | **हि** स्या[1]द्विशेषणे [2]हेतौ **तु** स्या[1]द्भेदे[2]ऽवधारणे ॥८८१॥ | (1) Difference. (2) Indeed. |

a चिराच्चिरेण b च विकल्पौप्रधानयोः, च विकल्पोप्रधानयोः

c संभोव्यये किल d हन्त शब्दं प्रचक्षते e महः, हनः

f तर्कनिश्चतयो, तर्कनिश्चययो g काम्ययोः h नु श्चित् प्रश्न ।

अयि प्रश्ने[1] सानुनये[a 2] सत्ये[1] शीघ्रे[2] तथाञ्जसा ।

(1) A question. (2) A kind enquiry. — (1) Truly. (2) Quickly.

ईषत्[1]किञ्चित्[2]मनाक्[3] प्रोक्ताः[4] किञ्चनस्तोकवाचकाः[5] ॥८८२॥

Some, little.

तूष्णीं जोषं भवेन्मौने[1] स्म स्यात्संस्मरणादिषु[1]

(1) Silently. — (1) Remembrance.

अङ्गेत्यामन्त्रणे[1] हं हो भो भो इति च कथ्यते ॥८८३॥

Calling to, addressing a person.

अनेकार्थे[1] भवेन्नाना ननु प्रश्ने[1]ऽवधारणे[2] ।

(1) Variously. — (1) Question. (2) Surely.

आकस्मिकार्थे[1] सहसा तत्काले[b 2] च निगद्यते ॥८८४॥

(1) Suddenly. (2) Instantly.

विस्तारे[1]ऽङ्गीकृता[2]वूरी कथ्यत उररी तथा ।

(1) Expansion. (2) Acceptance.

असंशये[1] भवेद्बाढं सहार्था[2]न्तिकयो[3]रमा ॥८८५॥

(1) Surely. (2) Together. (3) Vicinity.

अथानन्तर[1]कल्याण[2]सम्प्रश्नादिषु[3] कथ्यते ।

(1) Then. (2) Auspicious. (3) Question.

अथो इति तथा प्रोक्तो नामाभ्युपगमादिषु[1] ॥८८६॥

(1) Granting, allowing.

सदा सना च नित्यत्वे[1] स्वस्ति स्यान्मङ्गलादिषु[1] ।

(1) Always. — (1) Hail.

इतिशब्दः स्मृतो हेतौ[1] प्रकारा[2]दिसमाप्तिषु[3] ॥८८७॥

(1) Cause. (2) Similarity. (3) End.

इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालाया-
मनेकार्थकाण्डं पञ्चमं समाप्तम् ॥ ५ ॥

a सानुशये b नित्यार्थे ।

